तृतीयोऽध्यायः

वैशम्पायन उवाच

आर्यास्तवं प्रवक्ष्यामि यथोक्तमृषिभिः पुरा ।

नारायणीं नमस्यामि देवीं त्रिभुवनेश्वरीम् ।। १ ।।

त्वं हि सिद्धिर्धृतिः कीर्तिः श्रीर्विद्या संनतिर्मतिः ।

संध्या रात्रिः प्रभा निद्रा कालरात्रिस्तथैव च ।। २ ।।

आर्या कात्यायनी देवी कौशिकी ब्रह्मचारिणी ।

जननी सिद्धसेनस्य उग्रचारी महाबला ।। ३ ।।

जया च विजया चैव पुष्टिस्तुष्टिः क्षमा दया ।

ज्येष्ठा यमस्य भगिनी नीलकौशेयवासिनी ।। ४।।

बहुरूपा विरूपा च अनेकविधिचारिणी ।

विरूपाक्षी विशालाक्षी भक्तानां परिरक्षिणी ।। ५ ।।

पर्वताग्रेषु घोरेषु नदीषु च गुहासु च ।

वासस्ते च महादेवि वनेषूपवनेषु च ।। ६ ।।

शबरैर्बर्बरैश्चैव पुलिन्दैश्च सुपूजिता ।

मयूरपिच्छध्वजिनी लोकान् क्रमसि सर्वशः ।। ७ ।।

कुकुटैश्छागलैर्मेषैः सिंहैर्व्याघ्रैः समाकुला ।

घण्टानिनादबहुला विन्ध्यवासिन्यभिश्रुता ।। ८ ।।

त्रिशूलपट्टिशधरा सूर्यचन्द्रपताकिनी ।

नवमी कृष्णपक्षस्य शुक्लस्यैकादशी तथा ।। ९ ।।

भगिनी बलदेवस्य रजनी कलहप्रिया ।

आवासः सर्वभूतानां निष्ठा च परमा गतिः ।। 2.3.१० ।।

नन्दगोपसुता चैव देवानां विजयावहा ।

चीरवासाः सुवासाश्च रौद्री संध्याचरी निशा ।। ११ ।।

प्रकीर्णकेशी मृत्युश्च सुरामांसबलिप्रिया ।
लक्ष्मीरलक्ष्मीरूपेण दानवानां वधाय च ।।१२ ।।
सावित्री चापि देवानां माता भूतगणस्य च ।
कन्यानां ब्रह्मचर्यं त्वं सौभाग्यं प्रमदासु च ।। १३ ।।
अन्तर्वेदी च यज्ञानामृत्विजां चैव दक्षिणा ।
कर्षकाणां च सीतेति भूतानां धरणीति च ।। १४ ।।
सिद्धिः सांयात्रिकाणां तु वेला त्वं सागरस्य च।। ।
यक्षाणां प्रथमा यक्षी नागानां सुरसेति च ।। १५ ।।
ब्रह्मवादिन्यथो दीक्षा शोभा च परमा तथा ।
ज्योतिषां त्वं प्रभा देवि नक्षत्राणां च रोहिणी ।। १६ ।।
राजद्वारेषु तीर्थेषु नदीनां सङ्गमेषु च ।
पूर्णा च पूर्णिमा चन्द्रे कृत्तिवासा इति स्मृता ।। १७ ।।
सरस्वती च वाल्मीके स्मृतिर्द्वैपायने तथा ।
ऋषीणां धर्मबुद्धिस्तु देवानां मानसी तथा ।। १८ ।।
सुरा देवी तु भूतेषु स्तूयसे त्वं स्वकर्मभिः ।
इन्द्रस्य चारुदृष्टिस्त्वं सहस्रनयनेति च ।। १९ ।।
तापसानां च देवी त्वमरणी चाग्निहोत्रिणाम्।
क्षुधा च सर्वभूतानां तृप्तिस्त्वं दैवतेषु च ।। 2.3.२०।।
स्वाहा तृप्तिर्धृतिर्मेधा वसूनां त्वं वसूमती ।
आशा त्वं मानुषाणां च पुष्टिश्च कृतकर्मणाम्।। २१ ।।
दिशश्च विदिशश्चैव तथा ह्यग्निशिखा प्रभा ।
शकुनी पूतना त्वं च रेवती च सुदारुणा ।। २२ ।।
निद्रापि सर्वभूतानां मोहिनी क्षत्रिया तथा ।
विद्यानां ब्रह्मविद्या त्वमोङ्कारोऽथ वषट् तथा ।। २३ ।।
नारीणां पार्वतीं च त्वां पौराणीमृषयो विदुः ।

अरुन्धती च साध्वीनां प्रजापतिवचो यथा ।। २४ ।।

पर्यायनामभिर्दिव्यैरिन्द्राणी चेति विश्रुता ।

त्वया व्याप्तमिदं सर्वं जगत् स्थावरजङ्गमम् ।। २५ ।।

संग्रामेषु च सर्वेषु अग्निप्रज्वलितेषु च।

नदीतीरेषु चौरेषु कान्तारेषु भयेषु च ।।२६।।

प्रवासे राजबन्धे च शत्रूणां च प्रमर्दने।

प्रणात्ययेषु सर्वेषु त्वं हि रक्षा न संशयः।। २७।।

त्वयि मे हृदयं देवि त्वयि चित्तं मनस्त्वयि ।

रक्ष मां सर्वपापेभ्यः प्रसादं कर्तुमर्हसि ।। २८ ।।

इमं यः सुस्तवं दिव्यमिति व्यासप्रकल्पितम् ।

यः पठेत् प्रातरुत्थाय शुचिः प्रयतमानसः ।। २९ ।।

त्रिभिर्मासैः काङ्क्षितं च फलं वै सम्प्रयच्छसि ।

षड्भिर्मासैर्वरिष्ठं तु वरमेकं प्रयच्छसि ।। 2.3.३० ।।

अर्चिता तु त्रिभिर्मासैर्दिव्यं चक्षुः प्रयच्छसि ।

संवत्सरेण सिद्धिं तु यथाकामं प्रयच्छसि ।।३१ ।।

सत्यं ब्रह्म च दिव्यं च द्वैपायनवचो यथा ।

नृणां बन्धं वधं घोरं पुत्रनाशं धनक्षयम् ।। ३२ ।।

व्याधिमृत्युभयं चैव पूजिता शमयिष्यसि ।

भविष्यसि महाभागे वरदा कामरूपिणी ।। ३३ ।।

मोहयित्वा च तं कंसमेका त्वं भोक्ष्यसे जगत् ।

अहमप्यात्मनो वृत्तिं विधास्ये गोषु गोपवत् ।। ३४ ।।

समृद्ध्यर्थमहं चैव करिष्ये कंसगोपताम् ।

एवं तां स समादिश्य गतोऽन्तर्धानमीश्वरः ।। ३५ ।।

सा चापि तं नमस्कृत्य तथास्त्विति च निश्चिता ।। ३६ ।।

यश्चैतत् पठते स्तोत्रं शृणुयाद् वाप्यभीक्ष्णशः ।

सर्वार्थसिद्धिं लभते नरो नास्त्यत्र संशयः ।। ३७ ।।

इति श्रीमहाभारते खिलभागे हरिवंशे विष्णुपर्वणि स्वप्नगर्भविधाने आर्यास्तुतौ तृतीयोऽध्यायः ।। ३ ।।